# भूमिका

नमस्कार। संन्यासोपनिषद् के अभी तक मुझे दो पाठभेद प्राप्त हुए हैं। इसके अतिरिक्त दूसरा पाठ प्रकाशित पुस्तकों में है, जो कि मुक्तिकोपनिषद् के अनुसार सामवेदीय है। यह पाठ मेरे किए शोधानुसार अप्रकाशित (कुछेक वेबसाइट्स पर वर्ड फाइल को छोड़कर, कागज पर अप्रकाशित) ही था। अभी मैं इसकी यहाँ आप लोगों की सुविधा के लिए पीडीएफ साझा कर रहा हूँ। शोधार्थी,विद्वज्जन,विद्यार्थी तथा जिज्ञासुओं के लिए यह विशेष उपयोगी है। मेरा उपनिषद् संबंधी शोध के चलते इस उपनिषद् को पीडीएफ में न पाकर यहाँ स्थापित कर रहा हूँ।

- डॉ.हिमांशुगौडः

देही संन्यसनाद्याति परां सालोक्यतां पराम् ।
ॐ तत्सच्चिन्मयं ब्रह्म सर्वातीतं समाश्रये ॥१॥

ॐ पूर्णमद इति शान्तिः ॥हरिः ॐ ॥

अथाहिताग्निर्म्रियेत प्रेतस्य मन्त्रैः संस्कारोपतिष्ठते । स्वस्थो वाश्रमपारं गच्छेयमिति । एतान्पितृमेधिकानोषधिसंभारान्संभृत्यारण्येगत्वाऽमावास्यायां प्रातरेवाग्नीनुपसमाधाय पितृभ्यः श्राद्धतर्पणं कृत्वा ब्रह्मेष्टिंनिर्वपेत् । स सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्यैषाहुतिर्दिव्याऽमृतत्वायकल्पतामित्येवमत ऊर्ध्वं यद्ब्रह्माभ्युदयद्दिवं च लोकमिदममुं च सर्वं सर्वम-भिजन्युः । सर्वश्रियं दधतु सुमनस्यमाना ब्रह्मजज्ञानमिति ब्रह्मणेऽथर्वणेप्रजापतयेऽनुमतयेऽग्नये स्विष्टकृत इति हुत्वा यज्ञ यज्ञं गच्छेत्यग्नावरणीहुत्वोचित्सखायमिति चतुर्भिरनुवाकैराज्याहुतीर्जुहुयात्तैरेवोपतिष्टते ।मय्यग्नेऽग्निमिति चाथो अग्नीन्समारोपयेद्व्रतवान्स्यादतन्द्रित इति ॥१॥

तत्र श्लोकाः--ब्रह्मचर्याश्रमे खिन्नो गुरुशुश्रूषणे रतः ।
वेदानधीत्यानुज्ञातौच्यते गुरुणाश्रमी ॥ दारमाहृत्य सदृशमग्निमाधाय

शक्तितः । ब्राह्मीमिष्टिंयजेत्तासामहोरात्रेण निर्वपेत् ॥ संविभज्य सुतानर्थैग्र्राम्यकामान्विसृज्य च ।चरेत वनमार्गेण शुचौ देशे परिभ्रमः ॥ वायुभक्षोऽम्बुभक्षो वा विहिता-नोत्तरः फलैः । स्वशरीरे समारोपः पृथिव्यां नाक्षुपातकाः । सह तेनैव पुरुषःकथं संन्यस्त उच्यते ॥२॥

सनामधेयस्तु स किं यस्मिन्संन्यस्त उच्यते ।तस्मात्फलविशुद्धाङ्गी संन्यासं सहतेऽर्चिमान् ॥ अग्निवर्णं निष्क्रामति वानप्रस्थंप्रपद्यते । लोकाद्भार्यया सहितो वनं गच्छति संयतः ॥ त्यक्त्वा कामान्संन्य-सति भयं किमनुपश्यति । किंवा दुःखं समुद्दिश्य भोगांस्त्यजति सुस्थितान् ॥गर्भवासभयाद्भीतः शीतोष्णाभ्यां तथैव च । गुहां प्रवेष्टुमिच्छामि परंपदमनामयमिति ॥३॥

संन्यस्याग्निं न पुनरावर्तनं यन्मन्युर्जायामावहृदि-त्यथाध्यात्ममन्त्राञ्जपेद्दीक्षामुपेयात् । काषायवासाः कक्षोपस्थलोमानि वर्जये-दूर्ध्वगोपायुर्विमुक्तमार्गो भवत्यनयैव चेद्भिक्षाशनं दध्यात्पवित्रं धारयेज्जन्तु-संरक्षणार्थम् । तत्र श्लोकाः--कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहम् ।शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ॥ पवित्रं स्नानशाटीं चोत्तरा-सङ्गस्त्रिदण्डकम् । अतोऽतिरिक्तं यत्किंचित्सर्वं तद्वर्जयेद्यतिः ॥३॥

नदीपुलिनशायी स्याद्देवागारेषु वाऽप्युत । नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ॥स्नानं दानं तथा शौचमद्भिः पूताभिराचरेत् । स्तूयमानो न तुष्येत निन्दितोन शपेत्परान् ॥ भिक्षादि वैदलं पात्रं स्नानद्रव्यमवारितम् । एतां वृत्ति-मुपासीना घातयन्तीन्द्रियाणि च ॥ विद्याया मनसि संयोगो मनसाकाशश्चा-काशाद्वायुर्वायोर्ज्योतिर्ज्योतिष आपोऽद्भ्यः पृथिवी पृथिव्या इत्येषा भूतानांब्रह्म प्रपद्यते ॥४॥

अजरममरमक्षरमव्ययं प्रपद्यते तदभ्यासेन प्राणापानौसंयम्य तत्र श्लोकाः-
-वृषणापानयोर्मध्ये पाणी आस्थाय संश्रयेत् । संदश्यदशनैर्जिह्वां
यवमात्रे विनिर्गताम् ॥ माषमात्रां तथा दृष्टिं श्रोत्रे स्थाप्य तथाभ्रुवि ।
श्रवणे नासिके न गन्धाय न त्वचं न स्पर्शयेत् ॥ अथ शैवं पदं यत्रतद्ब्रह्म
तत्परायणम् । तदभ्यासेन लभ्यते पूर्वजन्मार्चितात्मनः ॥ अथ
तैःसंभूतैर्वायुः संस्थाप्य हृदयं तपः । ऊर्ध्वं प्रपद्यते देहाद्भित्त्वा मूर्धानम-
व्ययम् ॥ अथाऽयं मूर्धानमस्य देहैषा गतिर्गतिमताम् । ये प्राप्य
परमांगतिं भूयस्ते न निवर्तन्ते परात्परमवस्थात्परात्परमवस्थादिति
॥५॥

ॐ पूर्णमद इति शान्तिः ॥इत्याथर्वणीया संन्यासोपनिषत्समाप्ता
॥१११॥